स्याः कमलम् गर्भद्वारम् अभिवम् अभिव्यक्तिमत् म्लक्षणोपेतं वा। कुर्विति शेषः।

ये शालाः परिनृत्यन्ति सायं गर्दभनादिनः।
कुसूला ये च कुक्षिलाः ककुभाः करुमाः[1] स्रिमाः[2]।
तानोषधे त्वं गन्धेन विषूचीनान् वि नाशय॥ १०॥

। शालाः। परिऽनृत्यन्ति[3]। सायम्। गर्दभऽनादिनः।
सूलाः। ये। च। कुक्षिलाः। ककुभाः[4]। करुमाः। स्रिमाः।
तान्। ओषधे। त्वम्। गन्धेन। विषूचीनान्। वि। नाशय॥ १०॥

ये पिशाचाः सायं समये गर्दभनादिनः गर्दभवद् आक्रोशन्तः सन्तः। र्त्युपमाने' (पा ३,२,७९) इति णिनिः। शालाः परिनृत्यन्ति शालानां गृहाणां रेतो[5] नृत्यन्ति। एवं ये च कुसूलाः कुसूलाकृतयः परिनृत्यन्ति। ये च कुक्षिलाः इत्कुक्षयः। ककुभाः अर्जुनवृक्षवद् भयंकराकृतयः। एवं खरुमाः[6] श्रुमाः[6] च नाना- रैर्ध्वनिभिश्च विशिष्टाः सन्तः शालायाः परितो नृत्यन्ति तान् सर्वान् हे षधे गौरसर्षप पीतसर्षप वा त्वं गन्धेन तव परिमलेन विषूचीनान् विष्व- ञ्चनान् कृत्वा वि नाशय।

इत्यष्टमकाण्डे तृतीयेऽनुवाके तृतीयं सूक्तम्।

'ये कुकुन्धाः'[6] इति सूक्तस्य पूर्वसूक्तेन सह उक्तो विनियोगः।

ये [7]कुकुन्धाः कुकूरभाः कृत्तीर्दूर्शानि[8] बिभ्रति।
क्लीबा इव प्रनृत्यन्तो वने ये कुर्वते[9] घोषं तानितो नाशयामसि॥११॥

। कुकुन्धाः। कुकूरभाः। कृत्तीः। दूर्शानि। बिभ्रति।
लीबाःऽइव। प्रऽनृत्यन्तः। वने। ये। कुर्वते। घोषम्। तान्। इतः। नाशयामसि॥ ११॥

ये प्रसिद्धाः कुकुन्धाः[6] एतत्संज्ञकाः पिशाचाः। कीदृशाः। कुकूरवाः[6] कुकू त्येवमात्मकेन रवेण युक्ताः कुक्कुटवद् ध्वनिं कुर्वाणाः कृत्यः[6] हिंसाकर्मभिः

१. खरुमा S, गा.; °मा D.K,Bh,Km,Sm,V,Cs,M,W,O. २. स्रिमाः B,I,Sm; ःमाः A,W; श्रमाः S; श्रुमाः गा. ३. प्रति° P,P², J; परि° अपि J. ४. ककुभाः P. . परि S'. ६. वैतु. मंपा. ७. ककुन्धाः करूरभाः कृत्यैर्दू° पै १६,८०,१; °दूष्यानि S'. . कुर्वतो S'. ९. कुकुधाः P².